# द्वितीयः सर्गः

( उपजातिः )

ततः* सुनीलालक-भूषितास्यः
पीताम्बरो बल्लव-कामिनीभिः ।
कुर्वन् कलं वेणु-रवं स ताभिः
साकं ह्रदिन्याः[१] पुलिनं जगाम ॥१॥

( रथोद्धता )

सिन्धुजा[२]-पति-मुदे समास्तृतं[५]
तिग्मरश्मि-सुतया[३] सुविस्तृतम् ।
गौर वस्त्रमिव चन्द्र[४]-भासितं
फुल्ल-कैरव-समीर-वासितम् ॥२॥

( इन्द्रवज्रा )

भक्ति-प्रियैः[६] पूर्ण-मनोरथोऽपि[७]
हासेक्षणालिङ्गनचुम्बनाद्यैः ।
तस्मिँस्तदर्थेन्द्रिय-चेष्टिताभि[८]-
स्ताभिः स रेमे सह पद्मनाभः ॥३॥

*" अथ गोपी सहित-कृष्णस्य यमुना-पुलिन-गमनं युग्मेनाह " । १ नद्याः ( अत्र यमुनायाः ) । २ लक्ष्मी : । ३ सूर्य-कन्यया यमुनया ।४"चन्द्रेण भासितं,चन्द्रस्य भया ( कान्त्या ) सितमिति वा । " ५ स्व-गृहागतस्य स्वभर्तृ-जामातृत्वेन स्व-जामातुः श्रीकृष्णस्योपवेशनार्थं भूमौ प्रसारितम् ।" ६ " क्रीडाचरणे हेतुगर्भं विशेषणम् ।" ७ " रमणेच्छा-शून्योऽपीत्यर्थः " ८ " सः ( हरिः ) एवार्थः ( प्रयोजनं ) येषां तानिः तादृशानीन्द्रिय-चेष्टितानि यासां ताभिः । निस्सीम-भक्ति-सम्पन्नाभिरित्यर्थः । " " सर्वान्तरात्मनि स्वात्मारामे तस्मिन् व्यभिचारादिशङ्का दूरतोऽपास्तेति भावः। अयमेवाशयः , स्वात्मारामोऽप्यरीरमत् ' इत्यादिना श्रीभागवते उपवर्णित इति । "

( इन्द्रवज्रा )

आलिङ्गितानां हरिणा सहासं
स्नेहेन संसिद्ध-मनोरथानाम् ।
राधेतरासां[9] व्रज-सुन्दरीणां
चेतांसि मानं बिभराम्बभूवुः[10] ॥४॥

( वसन्त-तिलका )

ज्ञात्वाभिमान-कलुषं हृदयं स तासां
कन्दर्प-गर्व-शमनः सकलान्तरात्मा[11] ।
लज्जा-विनम्र-वदनां सरसी-रुहाक्षी-
मन्तर्दधे समुपगृह्य तदैव[12] राधाम्[13] ॥५॥

( उपेन्द्रवज्रा )

अशोक-पुन्नाग[14]-रसाल-वृक्षैर्
विराजितं मत्ततरालि-पुञ्जम् ।
ततो[15] हरिर्वेणु-रवं प्रकुर्वन्
सहासर्द्[16]राधिकया निकुञ्जम् ॥६॥

( रथोद्धता )

यत्र पुष्प-निचयाचिता[17] मही
तन्निकुञ्ज-भवनं तदा मही[18] ।
देवराज-नुत-भूरि-विक्रमः
प्राविशत्सह तया त्रि-विक्रमः[19] ॥७॥

---

९ पञ्चमीसमासे षष्ठी-बहुवचनम् । १० बिभर्तेर्लिटि प्रथम-पुरुष-बहुवचनम् । ११ "गोपिका-हृदयस्थाभिमानज्ञाने हेतुगर्भं विशेषणम्" । १२ "गोप्यभिमानसमय एव ।" १३ 'कृष्ण-जन्म-खण्डे गोलोकस्था राधा श्रीदामशापेन गोकुलेऽवतीर्णेति वर्णितम् । श्रीमद्भागवतेऽपि "अनया राधितो नूनम्" इत्यत्र राधा सञ्जाता यस्येति व्युत्पत्त्या राधाया मुख्यात्वं व्याख्याकृद्विशेषेण प्रतिपादितमित्यभिप्रेत्यात्रापि राधाया भगवच्छक्तित्वं श्रैष्ठ्यं चोपवार्णितामिति ।" १४ "चम्पका :" १५ "राधा-हरण-कर्तृत्वेनान्वर्थनामेति व्यज्ञते । १६ अगच्छत् । १७ व्याप्ता । १८ "मह उत्सवोस्यास्तीति मही (उत्सवसम्पन्नः) ।" १९ "अति-शीघ्र-गमन-कर्तेति व्यज्यते ।" यमकालंकारः।

( स्वागता )

हेम-कुण्डल-विभूषित-कर्णश् ।
चारु-नृत्य-दमितेक्षण-कर्णः[२०] ।
तत्र वाग्जित-कल-ध्वनि-कृष्णैः[२१]
क्रीडति स्म स तया सह कृष्णः ॥८॥

( उपजातिः )

अक्षारि-ताताशन-शत्रु-पिच्छ-
किरीट-माली[२२] कमलायताक्षः ।
वैश्वानरायुद्भव[२३]-तुल्य-वक्त्रः
कृष्णस्तदा गां[२४] समुवाच राधाम् ॥९॥

( रथोद्धता )

" त्वन्मुखेन्दु-विजिगीषयेव खे
प्रस्फुरत्ययमलं[२५] शशी किल ।
निर्जितस्तव मुखेन राधिके
लज्जयेव च[२६] बिभर्ति लाञ्छनम् ॥१०॥

मत्त-नागपति-मन्दगो[२७] वनं
चन्द्र-भा-लसित-निम्नगा-वनम्[२८] ।
पक्षि-वृन्द-युतमिन्दिराधिके[२९]
पुष्पितागम[३०]मभिपश्य राधिके ॥११॥

---

२० " ईक्षणे ( नेत्रे ) एव कर्णौ यस्य सः—सर्पः ( अत्र कालियः ) चारु-नृत्येन दमितः शिक्षित ईक्षण कर्णः ( कालियः ) येन सः " । २१ " वाचा जितः कलध्वनिः कृष्णः कोकिलः येन सः । ' कृष्णः काके पिके वर्णे इति हैमः । " अत्र श्लोके यमकालंकारः । २२ " अक्षस्य ( मन्दोदरी-सुतस्य ) अरिः ( हनुमान् ), तस्य तातः ( वायुः ) सः अशनं ( भक्ष्यं ) यस्य सः ( सर्पः ), तस्य शत्रुः ( मयूरः ) तस्य पिच्छानां किरीटेन मालते ( शोभते ) इति । " २३ वैश्वानरस्य ( अग्नेः ) अरिः ( उदकम् ), तस्मादुद्भवतीति ( कमलं चन्द्रो वा ) तेन तुल्यं वक्त्रं यस्य सः। " २४ वाणीम् । २५ अत्यन्तम् । २६ परंतु । अत्र श्लोके " मुखजयाय प्रवृत्तस्य चन्द्रस्य तस्मादेव पराजयो वर्णित इति विषमालंकारो रूपकोत्प्रेक्षाप्राणित इति संकरः । २७ गजगतिः । त्वमिति कर्तृपदस्य विशेषणम् । २८ जलम् । २९ लक्ष्म्याः श्रेष्ठे । ' राधिके ' इत्यस्य विशेषणम् । ३० पुष्पिता वृक्षा यत्र तत् । उपमायमकालंकारौ ।

( वसंत-तिलका )

उत्फुल्ल-कैरव-रजो-निचयं विधुन्वन्[31]
संस्पृष्ट-कोमल-दिनेश-सुता-तरङ्गैः[32] ।
चन्द्रानने! मलय-वायुरयं प्रहर्षाद्
घ्रातुं त्वदानन-सुगन्धमितीव[33] मियाति ॥१२॥

( इन्द्रवंशा )

कान्ते! त्वदीयाक्षि-सरोरुह-द्वयं
दृष्ट्वा विलोलाक्षि! विलज्जिता किल[34] ।
मत्वा स्व-नेत्र-द्वितयं निरर्थकं
शीघ्रं कुरङ्गीयमितःपलायते " ॥१३॥

( मालिनी )

सजल-जलद-नीलः कल्पितानेक-लीलः
स्रजमुरसि[35] दधानो वैजयंतीं सुबालः[36] ।
कनक-कपिश[37]-वस्त्रः कामिनी-भोग-लोलः[38]
सरभसमथ रेभे[39] राधिकां नन्दबालः ॥१४॥

( वसंत-तिलका )

उत्तुङ्ग-पीन-कुचया कमलायताक्ष्या
चन्द्रास्यया सपदि चम्पक-गौर-मूर्त्या ।
आलिङ्गितो भुजयुगेन भृशं स तन्व्या
सौदामिनीयुत इवाम्बुधरश्चकाशे ॥१५॥

---

३१ " प्रसारयन् । सौगन्ध्य-समृद्धोऽपीति भावः । " ३२ " शैत्योक्तिर्मान्द्योक्तिश्च " ३३ उत्प्रेक्षालंकारः । " एतेन राधा मुख-सौगन्ध्यातिशयो ध्वन्यते । " ३४ " अत्रोत्प्रेक्षा-व्यञ्जकस्येवादि-शब्दस्यानुपादानादगम्योत्प्रेक्षालंकारः।किल-शब्दस्याप्युत्प्रेक्षा-व्यञ्जकत्वमिति वा । " ३५ मालाम् । ३६ " सुष्ठु बालाः केशा यस्य सः । " ३७ पिङ्गम् । ३८ प्रथम-सर्गस्थ-तृतीय-श्लोके ८ मी टिप्पणी द्रष्टव्या । ३९ आलिलिङ्ग ।

(वसन्त-तिलका)

काञ्ची-पिनद्धं[४०]-कमनीयतरांशुकायास्
तस्या : सुगन्धि-कुसुम-ग्रथितालकाया : ।
सञ्चुम्ब्य कामं[४१]मधरं करुणा-मुकुन्दैः[४२]
सम्यक्[४३]परां मुदमवाप तदा मुकुन्द : ॥१६॥

(उपजातिः)

शृङ्गारमित्थं प्रविधाय तत्र[४४]
निरीक्षितुं पुष्पित-वृक्ष-शोभाम् ।
कृष्णोऽसुरारिर्विजहार[४५] तत्र[४६]
वनेऽथ राधानुययौ तमेव ॥१६॥

(वसन्त-तिलका)

गोपाङ्गनासु सकलास्व[४७]हमेव धन्या
यन्मामिहानयदियं[४८] प्रविहाय चान्या : ।
गोपीर्मुरारिरिति चेतसि राधिकाया :
प्रादुर्बभूव सहसा[४९]थ तदाभिमान : ॥१८॥

(उपजातिः)

ततोऽभिमानाद्धरिमाह सैवं
" न पारये[५०]ऽहं चलितुं मुरारे ।
त्वमेव मां तत्र नयस्व तस्माद्
"यत्रे[५१]हसे गन्तुमितोऽखिलेश :" ॥१२॥

---

४० बद्धम् । " वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः " । ४१ यथेच्छम् । ४२ निधिः । " 'महापद्मश्च पद्मश्च शंखो मकर–कच्छपौ । मुकुन्द–कुन्द–नीलाश्च खर्वश्च निधयो नव' इत्यमरः । " " अत्र करुणामुकुन्द इति कर्तृविशेषणस्योपादानात् कृपयैव चुम्बनादिकं चकार न तु काम–पारतन्त्र्यादित्यभिप्रायोऽभिव्यज्यते । यमकालंकारः । " ४३ " काम शास्त्रोक्त मार्गेण । " ४४ निकुञ्जभवने । ४५ सञ्चचार (विहरति स्म) । ४६ वने ४७ निर्धारणे सप्तमी । ४८ 'अयं मुरारिरन्या गोपीः प्रविहाय मामिहानयत्' इत्यन्वयः । ४९ " अकस्मात् । भवितव्यानुरोधादिति भावः । " ५० समर्थोऽस्मि । ५१ " 'यदीहसे गन्तुमितोऽखिलेश । ' इत्यपि पाठः । "

( उपजातिः )

तयैवमुक्तो मधुरां गिरं ताम्
“ आरुह्यतामंसे[52] ” इतीरयित्वा ।
सुरप्रियः सर्वजनेङ्गितज्ञैः[53]
कृष्णस्तदैव[54]ाथ तिरोबभूव ॥२०॥

( उपजातिः )

कृष्णं त्वदृष्ट्वा[55] विरहानलार्ता
वने भ्रमन्त्यश्रुमुखी ततः सा ।
हरे! मुरारे! प्रिय! दर्शय त्वं
स्वरूपमेवं विललाप राधा ॥२१॥

( पुष्पिताग्रा )

मृग-मदं[56]-तिलका लसत्कपोला
मृग-पति-मन्द[57]-गतिर्मृगेन्द्र-मध्या[58] ।
मृगधरं[59]-वदना मृगारि-साऽहं[60]
मृग-नयना मृगयाञ्चकार[61] राधा ॥२२॥

इति हरिविनोदकाव्ये द्वितीयः सर्गः।

---

५२ स्कन्धः । ५३ “ राधा—हृदय—स्थिताहंकारज्ञाने हेतुगर्भं विशेषणम् । ” ५४ “ आरोहणसमय एव । ” ५५ ‘ तु अदृष्ट्वा ’ इति परच्छेदः । ५६ कस्तूरी ५७ गजविशेषः । “ भद्रो मन्दो मृगश्चेति विज्ञेयास्त्रिविधा गजाः । क्रमेण हिमवद्विन्ध्य—सह्यजास्ते प्रकीर्तिताः ” इत्यभिधानात् । ५८ सिंहकटिः । ५९ चन्द्रः । ६० सिंहेन समान-नामानं, हरिमित्यर्थः । ६१ अन्वेषयामास ।

# तृतीय : सर्ग :

( वसन्त-तिलका )

अ[1]न्तर्हिते मुररिपौ विरहानलार्ता
गोपाङ्गनास्तपनजा[2]-पुलिने तदा ता : ।
तस्मिन्प्रसून-शरै[3]-बाण-विभिन्न-चित्ता
म्लानाननाश्च परिबभ्रमुरीक्षितुं तम् ॥१॥

( इंद्रवज्रा )

दृष्ट्वा शशाङ्कं विरहाग्नितप्ता
काचित्सखीमेवमुवाच रोषात् ।
"त्यक्ता मुकुन्देन निरीक्ष्य नो[4]ऽयं
श्री-बन्धु[5]रिन्दुः स्फुरतीव[6] हर्षात्" ॥२॥

"नायं शशी किन्तु रथाङ्ग[7]मुच्चैर्
अस्मद्वधार्थं हरिणा नियुक्तम् ।
प्राणान्यत[8] : कृन्तति नो वयस्या[9] : !"
कामेषु-विद्धेति जगाद चान्या ॥३॥

( उपजातिः )

अन्योन्यमित्थं प्रवदन्त्य उच्चैर्
वने भ्रमन्त्यो विवशाः समस्ता : ।
व्रजाङ्गनाःकृष्णपराः प्रखिन्नाः
समीक्ष्य संप्रोचुर[10]गाँस्तदानीम् ॥४॥

---

१ अथ पूर्वं पुलिने त्यक्तानां गोपिकानां वृत्तान्तं वर्णयति । २ सूर्य-जा (यमुना) ३ प्रसूनानि शरा यस्य स : (मदनः) । ४ अस्मान् । ५ "हेतु-गर्भं विशेषणं लक्ष्मी बन्धोरेतस्य श्रीकृष्णकृत-स्वभगिनी-सपत्नी-त्यागावलोकन-जन्य-हर्ष-हेतुकं स्फुरणं युक्तमेवेति भावः ।" ६ "हेतूत्प्रेक्षालंकार:" । ७ चक्रम् ८ यस्माद्धेतोः ९ सम्बोधनम् । "अत्र चन्द्रे रथाङ्गत्वारोपार्थं तद्गत-शशित्व-निन्हवोपवर्णनात् तत्र प्राण-कृंतन-कर्तृत्व-रूप-हेतो : प्रदर्शनाच्च हेत्वपन्हुतिरलंकार : ।" १० वृक्षान् ।

( वसन्त--तिलका )

न्यग्रोध-पिप्पल-मुखैरिह चोन्नतत्वात्[११]
सालैर्व्रजेश-तनयः प्रविलोकितः स्यात् ।
इत्थं विशङ्कय जगदुर्व्रज-योषितस्तान्
" प्राणेश्वरो हरिरनेन गतोऽध्वना किम् " ॥५॥

( उपजातिः )

अशोक-पुन्नाग-कुरण्टकादीन्[१२]
मत्वा प्रसूनैरुपकुर्वतोऽगान्[१३] ।
पप्रच्छुरित्थं वनिता " भवद्भिर्
हरिर्मनोज्ञः प्रसमीक्षितःकिम् ॥६॥

( पुष्पिताग्रा )

*सखि[१४] ! तुलसि ! हरिप्रिये[१५] भवत्या
व्रजपति-सूनुरिहावलोकितश्चेत् ।
ऋत-मधुर-सुभाषिते[१६] ! वदास्मान् "
इति तुलसीं व्रजयोषितस्तदोचुः ॥७॥

( उपजातिः )

÷गोपाङ्गनास्ता गहने मुरारिम्
अन्वेषयन्त्यः कुसुमेषु-तप्ताः ।
उन्मत्त-वाचः श्रम-खिन्न- चित्तास्
ततोऽनुचक्रुर्हरि-बाल-लीलाः[१७] ॥८॥

---

११ उच्चत्वाद्दूरं द्रष्टुं समर्थारिति भावः । अत्र श्लोके हरि-शब्देन गोपिका-चित्तचोर इति व्यज्यते । १२ पुष्पवृक्ष-विशेषः । १३ परोपकारिण एतेऽस्मान्प्रतिवदिष्यन्तीत्यभिप्रेत्येत्यर्थः । " * " अथ पुरुष जातयोऽशोकादयोऽस्मानुपेक्षन्ते । अस्मत्सजातिस्तुलसी कथयिष्यति । सा च प्रतारणां न विदधात्विति स्तुतिपूर्वकं तां पप्रच्छुरित्याह । " १४ " अनेनोपेक्षानर्हत्वमुक्तम् " । १५ " कृष्ण-वृत्तान्ताभिज्ञत्वमुक्तम् । " १६ " असत्य कर्कश-भाषणानर्हत्वमुक्तम् । " ÷ " अथ स्थावरत्वात्प्रत्युत्तरमददानां तुलसीं सापत्नभावादसूयापरां मत्वा भगवद्बाल-लीलानुकरणं कालक्षेपार्थं चक्रुरित्याह । " १७ " शिव-भागवतवत्समासः । "

( उपजातिः )

वृन्दावने गोपसुतास्तदानीं
परिभ्रमन्त्यो नव-पङ्कजास्याः ।
पदानि[१८] संवीक्ष्य बलानुजस्य
समूचुरन्योन्यमिति प्रहर्षात्[१९] ॥९॥

“ पदानि पङ्केरुह-चारु-नेत्राः[२०] ।
कृष्णस्य शीतांशु-मुखस्य नूनम्[२१] ।
यव-ध्वजाम्भोज-मुखैः सुचिन्हैर्
युक्तानि लक्ष्यन्त इमानि यस्मात्[२२] ” ॥१०॥

( उपेन्द्रवज्रा )

ततो विदूरेऽथ हरेः पदानि
समीक्ष्य योषित्पद-मिश्रितानि ।
व्रजाबलाः कामशराभितप्ताः
परस्परं प्रोचुरिति प्रकोपात् ॥११॥

( वसन्त-तिलका )

कस्याः पदानि रमणीय-तलान्यमूनि
नन्दात्मजेन कपटेन समं[२३] गतायाः ।
चेतांसि यानि खलु नः प्रसभं वयस्याः[२४] !
संवीक्षितानि सहसा परिखेदयन्ति ॥१२॥

( इन्द्रवज्रा )

श्रीकृष्ण-विश्लेष[२५]-विमूढ-चित्ता
गोपाङ्गनास्ता कुसुमेषु मत्ताः ।
वृन्दे स्वकीयेऽनवलोक्य राधाम्
अन्योन्यमित्थं जगदुस्तदानीम् ॥१३॥

---

१८ “ मार्गधूल्यामभिव्यक्तानि । ” १९ “ तद्दर्शनजन्याल्हादात् । ” २० सम्यग्विविच्य द्रष्टव्यामित्याभिप्रायः । २१ “ निश्चये । भवेयुरित्यध्याहृतम् । ” २२ सामुद्रिक चिन्हयुक्तानि यतः । पूर्ववाक्यार्थस्योत्तरवाक्यार्थेन समर्थनात्काव्यलिङ्गमलंकारः । २३ कृष्णेन सह । कपटेनेति करणम् । २४ संबोधनम् । २५ विरहः । “पूर्वं तु विमूढचित्तत्वात्तासां वृन्दे राधा वर्तते न वेति भानं नासीदित्यवगम्यते ” ।

( उपजातिः )

“ एतानि गोविन्द-मनः -प्रियाया :
पदानि सख्य : ! खलु राधिकाया : ।
कृष्णेन सार्धं सहसा गताया
यतो न चास्मासु विदृश्यते सा ॥१४॥

( इन्द्रवज्रा )

श्रीकृष्ण-चक्रस्य विलक्षणाल्यो[२६] !
धारा ध्रुवं[२७] स्याद्विपरीत-वर्णा[२८] ।
राधा यतो नः स्मरणेन सासून्
निष्कृन्तती ” त्याह रुषा तदैका ॥१५॥

( उपजातिः )

“ नात्रापराध : खलु राधिकाया
मनोहरो व्याजनिधिर्हरिर्वै[२९] ।
विहाय योऽस्मान् कपटेन राधां
निन्ये ” जगादेति सखीस्तदान्या ॥१६॥

( इन्द्रवज्रा )

“ सर्वान्तरात्मापि[३०] समान-दृष्टिः[३१]
कृष्णो यतोऽस्मान् प्रविहाय निन्ये ।
तामेव[३२] तस्मात्प्रतिकूल-दैवा :
सख्यो वयं[३३] ही ” ति जगाद चान्या ॥१७॥

---

२६ आल्यः सख्यः ( सम्बोधनम् )। “ राधाशरीरस्य सरलत्वात् प्रसिद्ध-चक्रधाराया वर्तुलत्वात्ततो विलक्षणेत्यर्थः । ” २७ स्वरूपोत्प्रेक्षा-व्यञ्जकं पदम् । २८ वर्णो गौरादिः, अक्षरं वा । “ धारेति वर्णद्वयस्य वैपरीत्ये राधेति सम्पद्यते । ” “ प्रसिद्ध—चक्र—धारा गात्रसंसृष्टा सती प्राणान् निकृन्तति; राधा तु स्मृतमात्रैवास्मत्प्राणान् कृन्ततीत्यतोऽपि तस्यास्ततो वैलक्षण्यमूह्यम् । काव्यलिङ्गमलंकारः । ” २९ एवार्थे । काव्यलिङ्गम् । ३० “ अतति सततं गच्छतीत्यात्मा । ” ३१ “निष्पक्षपातोऽप्रीत्यर्थः।” ३२ ‘ निन्ये ’ इत्यस्य कर्म । ३३ एवार्थे । काव्यलिङ्गम् ।

( इन्द्रवज्रा )

इत्थं वदन्त्यः पथि योषितस्ता
जग्मुस्तदा तत्[३४]सहसा निकुञ्जम् ।
चेतोहरो राधिकया विलासी
यस्मिन्विजह्रे सह[३५] नन्दसूनुः ॥१८॥

( उपजातिः )

दृष्ट्वावनिं पुष्पचयावकीर्णां
गोपाङ्गनास्ता जगदुस्तदेति ।
“ अत्रैव नूनं भगवान् विलासी
समं तया क्रीडितवान् मुकुन्दः ” ॥१९॥

समीक्षितुं कृष्णमथाङ्गनास्ता
वने भ्रमन्त्यो विरहानलार्ताः ।
ततो विदूरो हरि-विप्रयोगे
खिन्नां श्रमार्तां ददृशुः स[३६] राधाम् ॥२०॥

( वसन्त-तिलका )

संवीक्ष्य बल्लव-सुतां[३७] विरहानलार्तां[३७]
राधेत्युवाच विनयेन सखीः सखेदम् ।
“ज्ञात्वाभिमान-कलुषं[३८] हृदयं ममेशस्
त्यक्त्वेह मां प्रियंकरः[३९] स जगाम कृष्णः ” ॥२१॥

श्रुत्वा तदीय वचनं व्रज-योषितस्तास्
तन्व्या तया सह ततः श्रमखिन्नचित्ताः ।
संकर्षणानुज-गुणान् पथि वर्णयन्त्यस्
तैर्द्र[४०] विकर्तन[४१]-सुता-पुलिनं समीयुः ॥२२॥

**इति हरिविनोद काव्ये तृतीयः सर्गः ।**

---

३४ ‘ यस्मिन् ’ इत्यनेन संबध्यते । ३५ ‘ राधिकया ’ इत्यनेनान्वयः । ३६ पादपूरणे । ३७ “ संवीक्ष्य ” इत्यस्य कर्म ३८ “ सापराधां मां शिक्षितुमेवान्तर्दध इत्याशयः । ” ३९ “ तस्मिन्दोष-राहित्यं ध्वनितम् । ” ४० एव । ४१ सूर्यः ।

# चतुर्थः सर्गः ।

( अपरान्तिका )

*विरहदुःखिता राधिकादिकास्
तपन-कन्यका-सैकते ततः ।
मुररिपुं तदालक्ष्य[1] सुन्दरं
श्रुति-सुख-स्वरं[2] गोपिका जगुः ॥१॥

“ कमल[3]-लोचनं-कामितार्थदं रुचिरभूषणं चञ्चलाम्बरम् ।
सरजिनाननं श्याम ! सुन्दरं खलजनार्तिदं त्वामुपास्महे ॥२॥

ध्वज-यवादिभिश्चिन्हितं हरे ! पदयुगं श्रिया लालितं सदा ।
कुच- युगेषु नः पद्म-कोमलं घनतरे[4]ष्वपि स्थापयार्धिहन् ! ॥३॥

कमल-संनिभं कोमलाङ्गुलिं वरद ! सेवका[5]भीति-दायकम् ।
मृदुतरं हरे ! श्री-मुख-स्पृशं शिर[7]सि सुन्दरं धेहि नः करम् ॥४॥

उदधिजा-पदे चारु-विस्तरे युवति-वल्लभे [8]शर्मदोरसि ।
भुज-युगेन नः श्रीपते ! दृढं करि-कर-श्रिया[9]श्लेषया[10]रिहन् ! ॥५॥

---

* सर्गोपान्तश्लोकपर्यन्तमपरान्तिकावृत्तम् । १ लक्षीकृत्य ( उद्दिश्य ) । २ क्रियाविशेषणम् ३ “ उपासन-हेतु-गर्भाणि कमललोचनमित्यादीनि कर्मविशेषणानि... चञ्चला विद्युत्तद्वदम्बरं वस्त्रं यस्य तम्; खलजनानां ( प्रलम्बादीनां ) आर्तिदं पीडाप्रदम् । अतस्त्वयाविर्भूयास्मद्रक्षणं कार्यमिति भावः । यद्वा खलेति पृथक् पदं ( संबोधनं ) । जनार्तिदं...त्वामुपास्मह इति काक्वोपालम्भवाक्यम् । वस्तुतस्तु त्वदुपासनमयोग्यमेवेति भावः । जनार्तिदत्वे हेतुगर्भं कामितार्थदमिति कर्मविशेषणम् । कामः सञ्जातो यासां ताः कामिताः ( अस्मादृश्यः सकामाः ) तासामर्थं ( स्वकृतालिङ्गनजन्यमानन्दं ) द्यति ( खण्डयति ) इति तथाभूतम् । ननु निष्कामे मयि सकामार्थनाशकत्वं युक्तमेवेति चेत्, न, इत्यभिप्रायगर्भं विशेषणं चञ्चलाम्बरमिति । चञ्चला ( लक्ष्मीः ) अम्बा ( माता ) यस्य सः ( कामः ), तं राति ( =लाति रलयोरभेदात् ) स्वीकरोतीति तथाभूतं सकाममित्यर्थः । सकामे त्वयि सकामार्थनाशकत्वमयुक्तमेवेति भावः । एवंविधं मां किमिति भजथेति चेत्, रूपमोहितत्वादित्यभिप्रेत्य हेतुगर्भाणि कमललोचनादीन्यवशिष्ट-विशेषणानि । रूप-सम्पन्नस्यापि गुण-कण-शून्यस्य तवोपासनादस्माभिः स्वभौर्ख्यमेवाविष्कृतामित्युपालम्भवाक्याभिप्राय इति । ”
४ कोमलं पदयुगं कठिन-स्थले स्थापनानर्हं तथापि कृपया स्थापयेत्यर्थः । ५ व्यथाहारक । ६ अभयम् । ७ जात्यैकवचनम् । ८ सुखद । ९ उक्तपुंस्कत्वात् ‘ श्रिया ’ इति निर्देशः । ( गजशुण्डा सदृशेन ) ‘ भुजयुगेन ’ इत्यस्य विशेषणम् । १० आलिङ्ग ।

विशद[11]-लोचनं चन्द्र-संनिभं श्रवण-कुण्डलाभा-विराजितम् ।
कुटिल-कुन्तलालङ्कृतं मुखं रुचिर-नासिकं दर्शयेश[12] ! नः ॥ ६ ॥

विरह-पावकातप्त-विग्रहा[13] मनसिजेषुभिर्विह्वली-कृताः ।
प्रिय ! सखे[14] ! दृशा स्नेह-युक्तया वरद ! किङ्करीः[15] पश्य नः प्रभो ! ॥७॥

जलधि-कन्यया प्रार्थ्यते सदा यदखिलेशः ते स्वादु शर्मदम् ।
सुरत-वर्धनं स्वीयमीप्सितं[16] तदधरामृतं[17] पाययेश ! नः ॥ ८ ॥

व्रजप-नन्दनो नासि केवलं जलज-योनिना[18] पूर्वमर्थितः ।
समपनोदितुं भूभरं भवान् उदयमीयिवानत्र गोतले[19] ॥ ९ ॥

तव कथा-सुधा[20] शर्म-दायिनी श्रुति-मनःप्रिया क्लेश[21]-नाशिनी ।
जलधिजा-पते ! यैःश्रुता हि ते सुकृतिनः स्मृता[22] भूरिदा जनाः ॥१०॥

अमृततुल्यया वल्गु-वर्णया घनगभीरया हृत्प्रियार्थया ।
कुसुम-धन्वना जर्जरीकृता मधुरया गिरा जीवयेश ! नः ॥ ११ ॥

सुरत-वर्धनं लोक-पावनं सदय-चेतसं पीत-वाससम् ।
मदन-सुन्दरं स्त्री-मनोहरं व्रजप-बाल ! हे त्वामुपास्महे ॥ १२ ॥

मदन-पीडितास्त्वत्पदाम्बुज-द्वयमहार्निशं ध्यायतीः प्रभो ! ।
विरह-सागरे वीर[23] ! मज्जतीः सदय[23] ! किङ्करीस्तारयेश[23] ! नः ॥ १३॥

---

११ विकासिते । १२ सम्बोधनम् । १३ शरीराणि । १४ प्राणाधिक । १५ दासीः । १६ इच्छितम् । ( अस्माभिरिति शेषः ) । १७ यत्प्रार्थ्यते । १८ ब्रह्मणा । १० पृथ्वी-तले । २० कथा सुधा इव । यद्वा कथा असुधाशर्मदायिनि इति छेदः ( असव एव धं धनं येषां ते असुधाः प्राणिनः । तेषामशर्मदायिनी ( दुःखप्रदा ) " धं धने च धनाध्यक्षे " इत्येकाक्षरः । २१ अक्लेशनाशिनी तव कथा केवलं श्रुति-मनः प्रियास्तीति शेषः । त्वत्कथाश्रवण-तत्पराणामस्माकं दुःखप्राप्तेः क्लेश-नाशाभावात् पुनस्तच्छ्रवणे प्रवृत्तेश्चेति भावः । २२ (एवं सत्यपि) शास्त्रेषु। त्वत्कथश्रावकाः पुण्यवन्तः स्मृता एतदेवाश्चर्यम् ।"
२३ " शूरेण, सदयेन, नियन्त्रा च विरहार्तानां दासीनां शरणागतानां चास्मकमुपेक्षा नैव कार्येति गोपीनामभिप्रायः ।"

सुरपतिर्यदा सप्तवासरान् स-करका[24]म्बुभिर्वर्षति स्म नः ।
कर-कनिष्ठयाधृत्य भूधरं[25] प्रिय ! तदा[26] भवान् रक्षति स्म नः ॥१४॥

वन-हुताशनो गोधनान्विताः प्रववृते यदा दग्धुमीश ! नः !
प्रिय ! तत[27]स्त्वया दुःखिता भृशं व्रजपते ! तदा[28] रक्षिता वयम् ॥१५॥

शिवद ! गो-व्रजं रक्षितुं यदा व्रजसि काननं श्रीपते ! तदा ।
सुरत-वर्धनं त्वां विना हरे ! प्रलयवत्पलं भासते हि नः[29] ॥१६॥

विरह-पीडिताः खिन्न-चेतसः प्रिय ! सखे ! भवत्किङ्करीरियम्[30] ।
कुसुम-सायकस्तीक्ष्ण-सायकैः प्रहरतीश ! नः पाहि नस्ततः ॥१७॥

विधि-हरादिभिर्यत्सदा बुधैः[31] प्रणत-कामदं चिन्त्यते हृदि ।
प्रियतरं हरे ! स्वीयमाशु तच्चरणपङ्कजं दर्शयेश ! नः ॥१८॥

श्रुति-मनोहरं[32] वेणु-शब्दितं विरचितं[33] त्वयाकर्ण्य तत्पराः ।
निशि[34] घने वने तूर्णमागताः स[35] किमुपेक्षसे सम्प्रतीश ! नः ॥१९॥

प्रणत-कामदं मुक्तये बुधा[36] हृदय-पङ्कजे चिन्तयन्ति यम् ।
सदय-चेतसं पीतवाससं तमनिशं हरे ! त्वां भजामहे" ॥२०॥

[ उपजातिः ]

इत्थं प्रगायत्स्वबलाजनेषु प्रसून-रोपेषु[37]-विमोहितेषु ।
संस्पृष्ट-सप्ताश्व[38]-सुता-तरङ्गः समाययौ गन्धवहो[39]ऽतिमन्दम् ॥२१॥

## इति हरिविनोदकाव्ये चतुर्थः सर्गः ।

---

२४ वर्षोपलैः सह । २५ पर्वतम् ( गोवर्धनम् ) । २६ " इदानीमस्मदुपेक्षा किमिति क्रियते ' इति भावः । " २७ अग्नेः । ''२८ इदानीमुपेक्षानुचितेति भावः।'' २९ " वियोगं सोढुमसमर्थतरा वयमिदानीं नैवोपेक्ष्याः । " ३० " किङ्करीः अयम् " इतिच्छेदः ३१ देवैः । ' प्राज्ञ.चांद्रिः सुरा बुधाः ' इत्यभिधानात् । ३२ श्रुति-मनसोः हरं । ३३ कृतम् । ३४ " आगमनायोग्य-समये " । ३५ " येन पूर्वं वयं रक्षिताः " । ३६ पण्डिताः । ३७ पुष्प-बाणस्य ( मदनस्य ) शराः । " पत्री रोप इषुर्द्वयोः " इत्यमरः । ३८ सूर्यः । ३९ वायुः ।

# पञ्चमः सर्गः ।



( उपजातिः )

ततोऽतिखिन्नाः स्मर-बाण-तप्ताः
प्रफुल्ल-पङ्केरुह[1]-चारु-नेत्राः ।
प्रकल्प्य दूतं पवमान[2]मित्थं
व्रजाबलास्ताः सकलाः समूचुः ॥१॥

( वसन्त-तिलका )

" गत्वा व्रजेश-तनयस्य हरेः सकाशं
कान्ता-जन-प्रियतराकृतिमप्रकाशम्[3] ।
अस्माकमीप्सित-गुणं विहतामरारिं[4]
सन्देशमाशु कथयानिले[2] ! तं मुरारिम् ॥२॥

( उपजातिः )

' दूरस्थमस्मि व्रजनाथ-बालं
द्रुतं प्रयातु गदितु न वालम् ' ।
यदाशुगं[4] त्वां जगदुर्विमानम्[5]
ततस्त्वमेवं वद वाते[2] ! मा नः ॥३॥

सदागति[2]त्वान्निशि पद्मनाभं
त्वमेव[6] यातु त्वरया समर्थः ।
समीर[2] ! तं तूर्णमितः प्रयाहि
नो चेन्न सिध्येत् खलु नोऽयमर्थः[5] ॥४॥

---

१ कमलम् । २ वायु-नामानि सर्वाण्येतानि । ३ गूढं (क्रियाविशेषणम्) ४ निहता अमराणां (देवानां) अरयो येन तम् । ४ आशुगः शीघ्रगामी (वायुः) द्रुतं प्रयातुं नालं (समर्थः) इति स्वीय-नामाभिमानशून्यः सन्नित्यर्थः । ५ श्रीकृष्ण-प्राप्तिरूपः । ६ "अन्यस्तु सदागतित्वाभावाद्रात्रौ गन्तुं न समर्थ इत्यर्थः ।"

‘ मित्रात्मजायाः स परं प्रतीरं[७]
गतो यदि स्याच्च कथं[८] विदूरम् ।
यास्यामि तं ’ नेति वद स्वकीयं
ध्येयं नभस्वानिति* नामधेयम् ॥५॥

( रथोद्धता )

याहि वात ! जित-पन्नगाशनं[९]
कामदं व्रज-जनार्ति-नाशनम् ।
ब्रूहि तं त्वमिति लोक-पावनं
‘ स्त्री-जनस्य कुरु गोपपावनम्[१०] ’ ॥६॥

( उपेन्द्रवज्रा )

द्विजाधिराज[११]-ध्वज ! गोपकान्तौ[१२]
विपाण्डु[१३]-गण्डापतितालकान्ताः ।
भवत्पराः कृष्ण ! विहन्तु-कामः
सुमेषुभिर्वर्षति नाथ ! कामः ॥७॥

( पुष्पिताग्रा )

प्रियतर ! भवता समुज्झितानां
तपन-सुता-पुलिने समास्थितानाम् ।
विकसित[१४]-सरसीरुहाननानां
हन्ति मनांसि शशी व्रजाङ्गनानाम् ॥८॥

---

७ सूर्य-कन्यायाः ( यमुनायाः )। परं प्रतीरं ( अन्यत् तटं )। ८ ‘ कथं यास्यामि ’ इति संबन्धः। नभः ( आश्रयत्वेन ) विद्यते यस्येति नभस्वान्। ९ गरुडः सः जित यस्मिन्कर्मणि यथा स्यात् तथेति क्रियाविशेषणम्। १० ( हे ) गोपप ! ( गोपरक्षक ) अवनं ( रक्षणं ) कुरु। ११ गरुडः। १२ ‘ विहन्तुकाम ’ इत्यस्य कर्म। १३ “ भवद्विरह-जन्य-तापात् ”। १४ “ पूर्वोवस्थाभिप्रायकं विशेषणं ”। “ मुकुलित ” इत्यपि पाठः। * वायुः।

( उपजातिः )

दोषाकरो[15] वै पुलिनेऽर्कजायाः
करै[16]: स्पृशन् केशव ! गोपजायाः[17]
स्फुरत्यतस्तप्त-तनूः समस्तास्
त्वमेव सञ्जीवयितुं क्षमस्ताः ॥९॥

गोपाङ्गनास्ता विरहाग्निदग्धाः
स्वयं कृतं केलि-कला-विदग्धाः ।
स्मृत्वापराधं त्वयि (?) शरण्ये
मनः समाधाय[18] चरन्त्यरण्ये ॥१०॥

( रथोद्धता )

ताः प्रफुल्लमभिवीक्ष्य काननं
सञ्चलन्नयन-तारकाननम्[19] ।
मोहिता विजित-पाकशासनं[20]
त्वां स्मरन्त्यसुर-लोक-नाशनम् ॥११॥

पञ्च-बाण- शर-जर्जर-कायास्
त्यक्त-भर्तृ-सुत-बन्धु-निकायाः[21] ।
जात-शर्मद-विलास-विरामा[22]
जीवयाश्वजित[23] ! बल्लव-रामाः ॥१२॥

---

१५ दोषा ( रात्रिं ) करोतीति । दोषाणामाकरः ( खनिः ) इति च । १६ किरणैः, हस्तैश्च । १७ द्वितीयान्तम् । १८ शरण्ये ( रक्षणार्हे ) त्वयि मनः समाधाय ( संस्थाप्य ) इति सम्बधः । " सापराधानामप्यनुतप्तानां रक्षणं कार्यमेवेति भावः । " १९ संचलन्त्यो नयनतारकाः ( कनीनिकाः ) येष्वेवंभूतान्याननानि यस्मिन् कर्मणि ( क्रियाविशेषणम्, कर्म विशेषणं वा ) । २० इन्द्रः । २१ समूहाः २२ जातः शर्मदस्य विलासस्य विरामो यासां ताः । २३ ' जीवय-आशु अजित ' इतिच्छेदः ।

मन्मथस्य नवमीं दशां[२४]मितास्
त्वद्वियोग-जनिताधिनामिता[२५]: ।
सैकतेऽथ सरितो मनोहरे
ताः पतन्ति विवशा मुहुर्हरे ! ॥१३॥

( उपजातिः )

ताराधिराजानन[२६] ! दर्शनं ते
कांक्षन्ति नन्दात्मज ! गोप-नार्यः ।
प्रदर्शयात्मानमतोऽधुना ताः
प्रपीडिताः सत्वरमाधिना[२७]र्यः ॥१४॥

( वंशस्थम् )

दयाम्बुरा[२८]शे ! जन-शर्म-दायकः
सुरारि-हन्ताऽखिल-लोक-नायकः ।
प्रचुम्ब्य तासामधरं वियाव[२९]कं
सुमेषु-जन्यं हर ताप-पावकम् " ॥१५॥

( वसन्त-तिलका )

इत्थं वदत्सु विरहाद्वनिता-व्रजेषु
संराजदानन[३०]-विनिर्जित-पङ्कजेषु ।
तस्मिन्नथो द्युति-पराजित-कोटि-सूनु[३१]ः
प्रादुर्बभूव पुलिने व्रजनाथ-सूनुः ॥१६॥

---

२४ मूर्च्छाम् । " दृङ्मनस्संग-संकल्पा जागरः कृशता रतिः । ह्रीत्यागोन्मादमूर्च्छान्ता इत्यनङ्ग-दशा दश " । तां इताः ( गताः ) । २५ आधिना अमिताः इतिच्छेदः । ( मनोव्यथया मूर्च्छां प्रापिताः ) अमिता अपरिमिताः । २६ चन्द्र-मुख । २७ ' आधिना प्रपीडिताः ' इति संबंधः । आर्यस्त्वम् । २८ अम्बुराशेरेव तापहरत्वं-पावकनाशकत्वमपि-योग्यम् । २९ विगतो यावको लाक्षारसो यस्मात्तम् । ३० संराजद्भिराननैः... । ३१ कोटिः संख्याविशेषः । सूनवः सूर्याः । " सूनुः पुत्रेऽनुजे रवौ " इत्यभिधानात् ।

दृष्ट्वा शशांक-वदनं कमला-निधानं
जाम्बूनदाभ[३२]ममलं वसनं दधानम् ।
कन्दर्प-तुल्यमथ तं सजलाभ्र-कृष्णं
गोप्यः प्रणम्य जगदुर्विनयेन कृष्णम् ॥१७॥

[ उपजातिः ]

" मत्तेभ[३३]-शुण्डा-निभ[३४]- बाहु-दण्डः
श्रीमान्कृताखण्डल[३५]-गर्व-खण्डः ।
कृतागसां[३६] देव ! खगेश-यानः[३७]
स्मर-व्यथां छिन्ध्यनुकम्पया नः ॥१८॥

[ वंशस्थम् ]

स्मर-व्यथा-तप्त-तनूः प्रियाङ्ग[३८] ! ताः[३९]
भवत्पदाब्जं शरणं समागताः ।
गुणेश ! तुच्छीकृत-सिन्धुजामृतं
स्वकीयमापायय[४०] नोऽधरामृतम् " ॥१९॥

[ उपजातिः ]

श्रुत्वेति वाक्यं प्रणताङ्गनानां
प्रसन्न-चेता हरिरङ्गनानाम् ।
सम्पूरयँश्चाथ तदीयकामं[४१]
चुचुम्ब तासां वदनानि कामम्[४२] ॥२०॥

---

३२ सुवर्ण-तुल्यं । ३३ गजः । ३४ सदृशः । ३५ इन्द्रः । ३६ सापराधानाम् 'नः' इति पदेन सम्बध्यते । ३७ वाहनं । ३८ अङ्ग ( हे ) प्रिय ( सम्बोधनम् ) ३९ ताः नः ( अस्मान् ) इति सम्बन्धः । ४० पिबेः सनि लोटि द्वितीय पुरुषैकवचनम्; णिजन्तत्वाद्द्विकर्मकता । ४१ मनोरथम् । ४२ यथेच्छम् ( पर्याप्तम् ) ।

( इन्द्रवज्रा )

हासेक्षणालिङ्गन-चुम्बनाद्यैः
कुर्वन् कलं वेणु-रवं विलासैः ।
राधादिकाभिः पुलिने हृदिन्यास्[43]
ताभिः स रेमे विविधैश्च लासैः[44] ॥२१॥

( शार्दूल-विक्रीडितम् )

बर्हापीड[45]धरः शशाङ्क-वदनो नाना-विभूषालसन्-
नीलाभ्राभ-तनुर्मतङ्ग-गतिर्मालां दधानो गले ।
कालिन्द्याः पुलिने प्रफुल्ल-कुमुदामोदे[46] विरेजे हरिर्
गोपी-मण्डल-मध्यगो विधुरिवाकाशे भ[47]-मध्यं गतः ॥२२॥

( उपजातिः )

कृत्वा विहारं व्रजनाथ-सूनुर्
वृन्दावने गोपसुताभिरित्थम् ।
साकं[48] कलं वेणु-रवं प्रकुर्वन्
जगाम ताभिश्च सहैव गोष्ठम् ॥२३॥

**इति श्रीवाठोडकरोपनामक-नीलकण्ठात्मज-गणेशभट्ट-विरचिते हरि-विनोद-काव्ये पंचमः सर्गः ॥**

---

४३ नद्याः ( यमुनायाः ) । ४४ हल्लीसकापरपर्यायैर्नृत्यैः । रलयोरभेदाद् रासैर्वा । "हल्लीसकलक्षणं काशीखण्ड-टीकायां प्रोक्तं यथा 'नारीणां मण्डली-नृत्य-बन्धो हल्लीसकं विदुः' इति । ( एकस्य पुम्सो बह्वीभिः स्त्रीभिः सह क्रीडनम् ) । रास-लक्षणं तु-'पृथुं सुवृत्तं मसृणं वितस्तिमा...तं कौ प्रविलिख्य शङ्कुम् । आक्रम्य पद्भ्यामितरेतरं तु हस्तैर्भ्रमोऽयं खलु रासगोष्ठी' इति ।" ४५ मयूर-पिच्छ-कलाप-धरः । ४६ पुलिन-विशेषणमेतत् । ४७ नक्षत्रमध्यम् । ४८ गोप-सुताभिरित्यनेनान्वयः ।

# श्रेयसि केन तृप्यते ?

[ एतत्प्रबन्धलेखकाः **श्री. रामचन्द्र मुंजे** महाशयाः **काव्यतीर्थ-शास्त्रि** ( M. O. L. ) पदवीधारिणोऽस्माकं ना. सं. कॉलेजच्छात्रेषु प्रमुखाः । आयुर्वेदेऽपि कृतपरिश्रमा एते । प्रबन्धेऽस्मिन् महत्वाकांक्षाया इयत्ताभावो दर्शितः । **सं.** ]

---

'सम्पदा सुस्थिरंमन्यो भवति स्वल्पयाऽपि यः
कृतकृत्यो विधिर्मन्ये न वर्धयति तस्य ताम् ॥

(माघे २/३२)

अल्पसन्तोषी खल्वयं लोकः । बहुलब्धव्यस्य भानाभावात् । कूपे मण्डूक इव गुणानिधौ व्यवहरन्नयं जनसमुदायः स्वस्थमानी भवति सकलैश्वर्यभाजमात्मानं मन्यमानः । स्वभावः खल्वयं लोकस्य । 'अज्ञता कस्य नामेह नोपहासाय जायते' । अज्ञानावृततमोमये जगतीह किमिष्टं किमनिष्टमिति ज्ञातारो विरला एव । केऽत्र जानन्ति याथातथ्येनेदं करणीयमिदमकरणीयमिति ?

अल्पस्यैव सुखस्याशां धृत्वा मनसि अंशमात्रेण तत्सिद्धौ 'हन्त-सिद्धोऽयमर्थ' इति सानन्दं मत्वा तस्माद्विरमतः पुरुषस्य सम्पत्सामग्र्यं सिद्ध्यति किम् ?

कश्चिदल्पविद्यामदेन मत्तश्छात्रः पश्यत्यात्मनि विद्यायाः प्रचुरत्वम् । तेन हि ततः परं नैव स ज्ञानसम्पादने प्रभुर्भवति । अपूर्वः कोशो भारत्याः । पूर्णताभास एवोत्कर्षप्रतिबन्धहेतुः । विदितवेदितव्यस्याधीतसर्वशास्त्रस्याप्युपदेष्टव्यं विद्यते जगति । नहि सर्वः सर्वं जानाति ।

परं विप्रलब्धः खल्वयं लोकः स्वल्पया भावनयेति कष्टम् । नाशमूला ह्यलंबुद्धिः । 'अतिलोभो न कर्तव्यश्चक्रं भ्रमति मस्तके' । 'लोभः पापस्य कारण' मिति च वचनजातम् । परं भिन्नोऽयं विषयः । अत्र हि विद्यमानस्य सम्पदुत्कर्षस्य वर्धनेच्छा नैव दोषाय । अयं कृतविभागश्च दृश्यते । 'असन्तुष्टा द्विजा नष्टाः सन्तुष्टाश्च महीभुजः । सलज्जा गणिका नष्टा निर्लज्जा च कुलाङ्गनेति' ।

सामान्य नियमोऽयं, लोके ऽल्पेनैश्वर्येण स्वस्थमानिनः पुरुषस्य उदय **एव न भवति इति ।**

लोके प्रायः सर्वे दैवमिति कंचित्पदार्थमवश्यं मन्यन्ते। किञ्च 'दैवं फलति सर्वत्र न विद्या न च पौरुषम्। पाषाणस्य कुतो विद्या येन देवत्वमागतः'। 'पुरुषः पौरुषं तावद् यावद्दैवन्तु सन्मुखम्। विपरीतगते दैवे न विद्या न च पौरुषम्'। इत्यादि वचनजातमिदमेव बोधयति। दैवमुल्लङ्घ्य हि किञ्चिदपि साध्यं साधयितुं न प्रभवो मानवाः।

परं दृश्यते सर्वत्र पूर्वं पौरुषस्यान्वाख्यानम्। छन्दानुसारिण एव जना दैवस्य प्राधान्यं मन्यन्ते। अस्मिन् विषये सदसद्विवेकिनस्तु दुर्लभा एव। 'दैवं बीजमिति प्रोक्तमुद्योगः क्षेत्रमुच्यते। क्षेत्रबीजसमोयागात् ततः सस्यं प्रवर्तते'। इति वचनानुसारं किमपि कर्तुमिच्छतः पुरुषस्य स्वान्ते प्रथमं संकल्पोदयो भवति। ततश्च तेन कल्पितं कर्तुं क्षेत्रमन्विष्यते। 'यथा खनन् खनित्रेण नरो वार्यधिगच्छति। तथा पुरुषकारेण दैवस्थं फलमश्नुते'। अत्रापि दैवं पौरुषावलम्बीति वर्णितम्। सर्वथा लोकेऽपि पौरुषहीना दैवं जुगुप्सत इत्येव दृष्टिपथमायाति। ननु लब्धोदयेऽपि तदभीप्सा पापमूला। परन्नेदं शङ्कनीयम्। महात्मनां हि प्रभूतेनाप्यैश्वर्येण सन्तोषलाभो न भवति। पूर्णोऽपि महार्णवश्चन्द्रोदयमिच्छति स्ववृद्ध्यर्थम्। उदयमिच्छतः कदापि तृप्तिर्न भवति। किन्तु स पूर्णत्वाय यतते। स यत्नं काम्यमानस्याभीष्टे नैव व्यभिचरति विधिः। एतदाचरन्त एव भणन्ति विध्यधिष्ठानमेव कार्यसिद्धावुपकरोति। अकृत्वा फलापेक्षामुद्योग आश्रयणीयः। भगवताऽपि एतदेवोपदिष्टम् 'कर्मण्येवाधिकारस्ते मा फलेषु कदाचन। मा कर्मफलहेतुर्भू मा ते सङ्गोऽस्त्वकर्माणि' इति।

स्वायत्तमुद्योगफलं मन्यमानास्तु एतदेव भणन्ति 'अप्राप्यं नाम नेहास्ति धीरस्य व्यवसायिनः' इति। सत्यप्येवं 'दैवे निरुन्धति निबन्धनतां वहन्ति। हन्त प्रयासपरुषाणि न पौरुषाणि' इत्यनेन वचनेन विमूढधियोऽनेके प्रमादालस्यग्राहगृहीता दैवे पराग्वदनशालिनि जाते न किञ्चिदपि सम्पादयितुं शक्यन्ते। अतः सामान्यतः सर्वेषां कृते पौरुषक्षेत्रे विध्यधिष्ठानमेवावश्यकम्। प्रवृत्तिं विना न किमपि सिध्यति इत्येष नियमो वर्तते। स्वसविधे विद्यमानाया अपि उत्साहशक्तेः उपयोगं कर्तुमालस्यं धारयन्त्यहंमन्या मानवाः। 'दैवं निहत्य कुरु पौरुष' मित्युपदिश्यते च। अतो यन्मे विधिना दत्तं तदेव विद्यते मे सविधे। अस्मादधिकन्तु न मे भाग्यं प्रभवति लब्धुम्। किंच विधिलिखितं ललाटे प्रोज्झितुं कः समर्थः इत्येवं चिन्तयन्तश्च स्वस्य

पौरुषहीनं चरितमावृण्वन्ति। मानवस्य ध्येयमेव तं परां कोटिं प्रापयति। ध्येयविरहितस्तु प्रवृत्तेरभावात् विधिसामग्र्यानुकूलोऽपि पौरुषाद्विमुखोऽवतिष्ठते। उद्योगनिरतस्यैव ध्येयोपलब्धिः।

षड्दोषाः पुरुषेणेह हातव्या भूतिमिच्छता इत्येवमादि इदमेव दिशति। परमन्ये यथातथमपि जीवनं यापयितुमुद्यता दृश्यन्ते। तेषां किं प्रयोजनं कस्याप्यभ्युदयस्याधिगमेन। परं नेदृशमेव मानवजन्मनः फलं भवितुमर्हति। पुरुषेण हि लोके श्रेष्ठत्वमाधिगम्यैव जीवितव्यम्। तदभावे तु केवलं जीवनं उच्छ्वसनमेव। 'गुणेष्वेव हि कर्तव्यः प्रयत्नः पुरुषैः सदा'। 'एकःश्लाघ्यः स जीवत्याधिकगुणतया चोच्छ्वसन्तीव चान्ये' इत्यनेन वचनजातेन विद्यमानेष्वेव गुणेषु तदुत्कर्षाधायकत्वं सम्पादनीयम्। विद्यमानाऽपि च गुणा मलिना भवन्त्यात्ममानिनः, कोषसुप्ततीक्ष्णखड्गवत् कार्याभावात्। सर्वथा सन्तुष्टस्य उदय एव न भवति। तस्य हि प्रवर्तयित्री मतिः विद्यमानेनैव सन्तुष्टा सती न किमपि कर्तुं प्रवर्तयति तम्। प्रवृत्यभावाद्धि अणुरपि न चलति स्थानात् स्थानान्तरम्। अतः मानवेन उत्कर्षाभिमुखेन भवितव्यम्। एतत्तु अनल्पया वाञ्छयैव सम्भवति। स्थावरजङ्गमात्मके विश्वेऽस्मिन् कस्यापि पदार्थस्य एकरूपा स्थितिर्नैव विद्यते। नद्याः समोदकत्वं न केनापि दृष्टमद्य यावत्।

विद्याया दानस्य तपसो वा एकरूपेणावस्थानं दुर्लभम्। विद्यमानेनोत्कर्षेण सुखं सुषुप्तस्य पुरुषस्य ऐश्वर्यसम्पदं तन्निष्क्रियतैव नाशयति। कश्चित्कलावान् यतते स्वेष्टप्राप्तौ यावन्न तदवगम्यते तेन। तदवगमागन्तरन्तु तेन अल्पनैव तत्र जातेन चञ्चुप्रवेशेन सन्तुष्टः सन् तदुन्नतौ उदासीनो भवति। तस्या हस्तप्राप्तायाः—कलायाः पूर्णताऽधिगमाभावे तु विद्यमानाऽपि नश्यति सा। किञ्च राज्ञाऽलंबुद्धिर्न कार्या। इत्येष हि नयमार्गः। जितराष्ट्रस्य पालने धनादिकस्य यशसो वा सम्पादने नृपो यदि स्वस्थः स्यात् तर्हि न निवसति लक्ष्मीस्तत्र। इयं हि खड्गमण्डलोत्पलवनविभ्रमभ्रमरी लक्ष्मी लब्धापि खलु दुःखेन परिपाल्यते। न विशेषज्ञतां विचारयति। किन्तु केवलं साहसे सा स्थिरीभवति। साहसस्य प्रथमावेग एव बलीयान् विद्यते। ततः परं निस्नेहो दीप इव स आवेगः क्षीणः सन् मन्दीभवति। तेन सह स्थिता ऐश्वर्यसम्पदपि क्रमेण नाशं प्रयाति। तथैव अद्यतनीयाः स्वातन्त्र्योत्सुका जननेतारो स्वीये कार्यक्षेत्रे प्रथममतीवोत्सुका दृश्यन्ते। तादृशं कार्यमपि कुर्वन्ति। परं तत्र

यावदन्त प्रारब्धोत्साहेन नैव स्थिरीभवन्ति। अत एव कृतकृत्यो विधिस्तेषां पौरुषं प्रतिबध्नाति। किञ्च अस्माकं भारतदेशे अनेकविद्याकुशला विद्यन्ते। प्रायेण संस्कृतज्ञा ऐतिहासिकवृत्तज्ञाश्च दरीदृश्यन्ते। इतरेषामपि शास्त्रविषयाणामभ्यासेच्छवो विद्यन्ते। परं प्रायेण स्वीयक्षेत्र अल्पेनैव सन्तुष्टा भवन्ति। आधुनिकाश्छात्रा 'एम ए' पदवीधारिणः, संस्कृतं, सायन्स, इंग्लिश, गणित, इत्यादि विषयेषु एकतरं विषयमवलम्ब्य केवलं परीक्षादित्सवस्तदभ्यासं कुर्वन्ति। परीक्षोत्तीर्णाः पदवीधारिणस्तु स्वविषये कुशलाऽपि तृप्ताः सन्तस्तत्रैव विरमन्ति। जर्मन–अमेरिका–पाश्चात्यदेशीयाश्च जना ईदृशमेवज्ञानं सम्पाद्य तस्य परां कोटिं दिदृक्षमाणाः तस्मिन्नेव स्वीकृते विषय अलौकिकं यशो लब्ध्वा लोकोपकाराय किमपि विशेषं कर्तुं प्रभवन्ति। अस्मदीया पदवीधारिणस्तूदरपूरणेच्छवः सन्तः आश्वेव विरमन्ति। अत्र हि भारते बुद्धिमन्तो जना विद्यन्ते पाश्चात्यदेशीयानामपेक्षया। परं कृतकृत्यतैव सर्वं नाशयत्यस्माकम्। वैज्ञानिकशास्त्रेषु न वयं अद्ययावत् स्वोत्कर्षं कर्तुं प्रभवो जातास्तेषामपेक्षया। सर्वं साधनन्तु विद्यते। परमिच्छाभाव एवात्र निदानं केवलम्। अस्माकं प्राचीनऋषिकृपयोपलब्धानां वेदानां ज्ञानेन परदेशवासिभिर्जनैः नूतनं वैमानिकं वैज्ञानिकं शस्त्रक्रियाविषयकञ्च ज्ञानमवाप्तम्। परं अस्मदीयैः संस्कृतज्ञैः किं कृतमद्ययावत्। विद्यन्ते भारते बहवः संस्कृतज्ञा वादविवादकुशलाः। परं न किमपि कर्तुं सोत्साहा तेषां मतिरिति कष्टम् कुत्रापि कलायां विद्यायां वा पूर्णत्वमेव प्रशंसनीयं भवति। लोकोत्तरत्वं सर्वत्र सम्पादनीयं विद्यते। यत्कर्तुं वयं प्रवृत्तास्तदन्तपर्यन्तं तदेव लब्धव्यमस्माभिः।

रक्षसां नृपो रावणः श्रूयते जगति प्रथितकीर्तिः। यद्यपि तेन स्वजन्मनि स्वध्येयबहिर्भूतं किमपि स्तुत्यं कर्म न कृतम्। तथापि यत्कृतं तस्य पूर्णत्वमेव सम्पादितम्। तेन हि परिमितं ध्येयं कदापि न निहितं स्वमनसि। चतुर्दशभुवनानां स्वामित्वं सम्पाद्यापि पराक्रमयशोऽलंकारैः स्ववपुषः श्रियो न्यूनतामिव भावयन् तस्याः पूर्णताञ्चकार जगन्नाथस्य श्रियोऽपहरणेन।

तस्मिन् काले अनेके आसन् नृपाः। परं विद्यमानया सम्पदा तुष्यन्तः विभवस्य परां कोटिं द्रष्टुं प्रभवन्ति स्म। अस्माकं भारतीया नृपाऽपि अलम्बुद्ध्यैव स्वैश्वर्यात् विनष्टा इति श्रूयते। पुरुषस्य इह किं कियल्लब्धव्यमित्यत्रापि भ्रान्तास्तपस्विनो मानवाः स्वजीवनसाफल्यं कर्तुमक्षमाः। सर्वत्र गुणसामग्र्यन्तु दुर्लभम्। अतः एकतरस्य विद्यमानस्यैव पूर्णत्वं सम्पादनीयम्।

'रिक्तः सर्वो भवति हि लघुः पूर्णतागौरवाय' । पूर्णत्वसम्पादनमेव सम्यगुदयः । प्रतिपच्चन्द्रस्य न तावती शोभा सम्पद्यते यावती पूर्णिमाचन्द्रस्य । स एव लोकाह्लादाय भवति ।

अस्माभिर्मन्यमानो विधिरपि प्रवृत्यधीन एव । मानवस्य हि प्रथमं क्षेमान्वेषणमाद्यं कर्तव्यम् । ततश्च विधेरुपयोगः । सर्वथा प्रवृत्यधीनं च पौरुषम् । पौरुषशृंखलाऽलग्बुद्धिरेव उदयप्रतिबन्धहेतुः । अतो मानवेन 'पूर्णता गौरवाय' प्रयतितव्यम् । 'तृप्तियोगः परेणापि महिम्ना न महात्मनां । पूर्णश्चन्द्रोदयाकांक्षी दृष्टान्तोऽत्र महार्णवः' । अथवा श्रेयसि केन तृप्यते । कृतार्थताया इयत्ताभावात्, इति ॥



# कालिदासं प्रति । *

## ' अंशुमाली '

( शा. वि. )

वन्दे त्वां कविश्रेष्ठ ! दर्शयति यः कण्वस्य पुण्याश्रमम्,
बालायाश्च वनौकसः परिणयं, क्रोधं च दुर्वाससः ।
वीर्य-प्रेम-पराक्रमं रघुकुलेशानां पुराणप्रियो
दिव्यैः काव्यशतैः प्रकाशितयशा यो गौरवं मन्यते॥१॥

मेनायां तु कुमारसंभवकृते गायन्नुमोत्पादनम्
आख्याति स्म हिमालये दृढतरं यः पेलवाङ्ग्यास्तपः ।
भूभृन्नायक ! प्रेम-ग्रंथिभिरुमां बध्नाति यो वल्लभे
सेनान्यां[1] च तथैव वर्णयति यस्तं[2] तारकस्य क्षयम् ॥२॥

गाढोत्कण्ठितमानसेन हि प्रियाविश्लेषदुःखैर्नवैर्
यक्षेण प्रणयेन रामगिरितो यूनापि शान्तेन वै ।
विद्युच्छोभित-मेघदूतकथितां वार्तां शुभां प्रेषयन्
दूरस्थां हृदयङ्गमां प्रियसखीं यः सान्त्वयत्याकुलाम् ।३।

दीर्घं निश्वसता च पूरुरवसा खे दत्तदृष्ट्या तथा
ताम्यन्नेत्रपुटेन[3] पाययति यो दिव्याङ्गनायाः श्रियम् ।
मालाकार ! निसर्गरम्यमथ यो गुम्फत्यपूर्वं प्रियं
दामैकं निपुणं प्रसून-बहुलं सर्वर्तुसंस्मारकम् ॥४॥

---

* रविदत्तस्य ' To Kalidas ' इत्याख्याङ्गलकाव्यस्यानुवादः ।

१ कुमारेण ( स्कन्देन ) २ प्रसिद्धं ३ ' अतृप्यन्नेत्रपुटेन ' इत्यपि पाठः ।

श्लेषप्रायनलोदयं प्रदिशता येनानलप्रेयसो[४]
भिन्नं मालविकागतेन हृदयं प्रेम्णा पुनर्दर्शितम् ।
अष्टाभिस्तनुभिः प्रपन्नमपि यश्चैकं विदन् पूरुषम्
तेनैव प्रकृतिं नियोजयति वै सांख्येन मार्गेण च ॥ ५ ॥

यः कान्तार-वनस्थली-गिरि-नदी-सिन्धू-प्रसन्नाश्रम-
ग्रामाणामुपवर्णकोऽपि विविध-क्ष्माभृत्सभागायकः ।
वाणी-भूषण ! ज्ञानसागर ! कलानाथ ! प्रगल्भप्रभ !
दिव्यं पावनमप्यपूर्वप्रतिभापूतं हि चक्षुस्तव ॥ ६ ॥

क्षिप्रा सोज्जयिनीगता नदति नो,[५] तद्राजचक्रं गतम्,
गम्भीरैर्ललितैस्तथापि हृदयं नो[६] रज्यते भाषितैः ।
भारत्या मणिमुख्य ! तेऽप्यवसिता ये विक्रमक्ष्माभृतो
रत्नान्यद्य विहाय त्वाममर ! भो आकर्णितं सादरम् ।७।

( वसंत तिलका )

मूर्धाभिषिक्तकविराज ! भवन्तमद्य
मर्त्यो गुणैर्विरहितोऽपि नमत्यकीर्तिम् ।
दूरस्थितोऽपि प्रणतोऽस्मि गुणाभिशालिन् !
श्री कालिदास ! जगतस्तु गुरो ! कवित्वे ॥८॥

---

४ अग्निमित्रस्येत्यर्थः । ' येनाग्निमित्रस्य च ' इति वा पाठः । ५ न हि । ६ अस्माकम् ।
७ तवेति शेषः । ८ जनैरित्यध्याहृतम् ।

# स्थायिभावानां संख्या



ले०:—प्रो. पां. कृ. सावळापूरकर

संस्कृतसाहित्यशास्त्रे रसनिर्मित्यै कल्पितेष्वावश्यकेषु प्रमेयेषु स्थायिभावाः प्रामुख्येन गण्यन्ते। मानवहृदयेषु स्थायित्वेन विद्यमानानां विविधानां मनोवृत्तीनां स्थायिभावा इति संज्ञा। यथा वीणायां विशिष्टतन्तुकम्पनेन भिन्ना विशिष्टा झंकारा उत्पद्यन्ते तथा आलम्बन–उद्दीपनादिभिर्बाह्यैर्विभावकारणैश्चाल्यमानास्तत्तद्विशिष्टाः स्थायिभावा जागृतिं लभन्ते, विभावानुभावव्यभिचारिसंयोगाच्च रसनिष्पत्तिर्भवतीति तात्पर्येन रससिद्धान्तः। विकृतिदर्शनं हास्यं पीडितदर्शनं करुणां वा जनयति; न तद्धास्यं तां करुणां वा हृदयेऽस्माकं बलात् कोऽपि बहित आरोपयति किन्तु वासनारूपेण स्थितं तेषां तेषांच भावानां वास्तव्यं जागृतित्वेन केवलं ज्ञातं भवति। कल्पना च एषा मानसशास्त्रदृष्ट्यापि अतीव शुद्धा प्रतिभाति। अत एते स्थायीभावाः केवलं शुद्धा अल्पाल्पसंख्याका एव गणनीया इति स्फुटमेव। संधि–शबलत्व–संकरादिभिरेतेषां नानात्वेनोपविभागा अपि सम्भवन्तीत्यप्रस्तुतत्वेन नात्र विचार्यते। नाट्यशास्त्रे षष्ठाध्याये भरतमुनिभिः पश्चाच्च सुप्रसिद्धैर्मम्मटाचार्यैरपि काव्यप्रकाशे चतुर्थोल्लासेऽष्ट स्थायीभावाः कथिताः, कारिका चेयं पठिता :—

रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा
जुगुप्सा विस्मयश्चेति स्थायिभावाः प्रकीर्तिताः।

भरतमुनिभिः प्रोक्तेयं कारिका पश्चाद्भूतैरन्यान्यसाहित्यशास्त्रकारैरपि अविकलोधृतेति ज्ञेयम्। नैकोऽपि तेषां संख्यालाघवं शक्यं मन्यमानस्तदर्थं चिकित्सां वा कुर्वाणो दृश्यते। प्रत्येकं स्थायिभावस्यैकोरस इत्यनुक्रमेण रसादीनामपि संख्या अष्ट एव गण्यते इति स्पष्टमेव। तथापि रससंख्यायां शुद्धत्वे भरतमुनिरपि स्वयं साशंको दृश्यते। प्रकरणे तस्मिन्नेव विधानान्तरत्वात्। रसानां गौणत्वं शुद्धत्वं च संकल्प्य भरत उक्तवान्

"तेषां उत्पतिहेतवश्च चत्वारो रसाः। शृंगारो वीरो रौद्रो बीभत्स इति। शृंगाराद्धि. भवेद्धास्यो रौद्राच्च करुणो रसः। वीराच्चैवाद्भुतोत्पत्तिः बीभत्साच्च भयानकः।" (ना. शा. अ. ६ श्लोक ३९) इति।

शृंगार-वीर-रौद्र-बीभत्सा इति प्रमुखा रसा अन्येतु तदुद्भूता इति तस्य मतमसंदिग्धम्। अतः स्थायिभावानामपि संख्यालाघवं शक्यं भवेदिति भरतमुनेरप्यभिमतमेवेत्यनुमितुं न कापि हानिः। प्राध्यापक श्री. नी. चाफेकर महाशयस्यापि रसमतमग्रे लिखितं सुविचार्यमेव। :—

'उत्कटभावनाविष्कारकारिरतेः क्रमेण शृंगार-वीर-करुणरसा उत्पद्यन्ते, वीराच्च रौद्र-बीभत्स-भयानका भवन्ति। हास्याद्भुतयोर्न स्वतंत्र रसस्थानमिति' ( काव्यचर्चा )

रससंख्याया लाघवं कृतं चेत्स्थायिभावानामपि संख्यालाघवमावश्यकमनुपततीत्यत्र न सन्देहः। अथवा यद्येकस्माद्रसादन्यः समुद्भूतस्तर्हि एकस्माद्विशिष्टात्स्थायिभावादन्यस्य विशिष्टस्य समुद्भवनं तर्कदृष्ट्या प्रतिष्ठितमेव। अत अनुजनितः स्थायिभावो न पूर्वजस्य सन्मानमर्हतीति पिण्डितार्थः।

अस्मत्पक्षे तु स्थायिभावानां संख्यामेतां न केवलं पूर्वस्मादप्यल्पाल्पतरांकर्तुं सुलभमेव प्रतिभाति, किन्तु सुखंच दुखंचेति स्थायिभावद्वयस्यैव कल्पनं पर्याप्तम्। व्यवहार सौलभ्यात्। 'सुख–दुःख–क्रोध–भयं' इति प्रबला मानवमनोविकारा इत्याङ्ग्लसाहित्यशास्त्रकाराणां मतम्। किन्तु क्रोधो भयं चेति वृत्तिद्वयं न केवलं दुःखजनितं दुःखपर्यवसितमपि इति मे मतिः। अत्युत्कटासु मनुष्य–मनोवृत्तिषु पक्षद्वयमेव संभवति। कापि प्रबला मनोवृत्तिः सुखजनिता दुःखजनिता वा, न तृतीयपक्षस्यास्तित्वमत्र कदापि शक्यम्। अत अस्मत्पक्षे तूक्ताः स्थायिभावाः सुखजनिता दुःखजनिता एव वा विद्यन्त इति कृते तेषां वर्गीकरणं निम्नप्रकारेण कर्तव्यम्:—




विस्मयो नाम विकारः स्थल–काल–पात्रभेदात्सुखावहो दुःखावहोऽपि शक्यस्तस्मात्तस्य वास्तव्यमुभयविभागेऽपि कल्पितमिति चतुरवाचकैर्लीलयैव ज्ञातव्यम्। उपर्युक्ता विभागव्यवस्था स्वीकृता चेत् केषामपि नूतननूतनानां

स्थायिभावानां रसानां च समावेशः पक्षान्तरेऽपि शक्यो भवेदेवेति सौकर्यं अभिनवाञ्शास्त्रकारानुत्साहितान्कर्तुं प्रभवति ।

सुखाभावो दुःखं, दुःखाभावश्च सुखं, अतः सुखं दुःखं वा एकमेव शुद्धस्थायिभावस्य कल्पनं कृत्वा द्वितीयोऽभावात्मको गणनीय इति पक्षोऽत्र संभवति । किन्तु पक्षमेतं स्वीकर्तुं मनुष्यः सर्वदा सुखितो दुःखितो वा एव भवति, ताटस्थ्यं न कदाप्यनुभवतीति प्रमेयमावश्यकमेव भवेत् । किन्तु दुष्टमेतद्व्यवहारविसंगतत्वात् । यदैकापि प्रबला मनोवृत्तिर्जागृता न स्यात्समयेतास्मिन् मनस्ताटस्थ्यमनुभवति, सर्वे स्थायिभावाः सुप्ताश्चेति एष पक्षस्वीकारः सदोषः ।

ननु शुद्धानन्दस्य निर्मितिरित्येक एव रसहेतुरिति सिद्धं चेत् कथं 'दुःख'मित्यस्य स्थायिभावस्य कल्पनमिति यद्याक्षिप्यते, निराकरणमपि तस्य पूर्वमेव कृतं शोकं स्थायिभावं मन्यमानैः शास्त्रकारैः । रसो वाङ्मयेप्रेरित एव भूत्वा व्यवहारे सुख-दुःखजनिताः कथा-वार्ता-वृत्तान्ताः वाङ्मयेष्वतीव मोददायिनः परिवसन्ति । पश्चात् 'पुर इव परिस्फुरन्, हृदयमिव प्रविशन्, सर्वाङ्गीणमिवालिङ्गन्, अन्यत् सर्वमिव तिरोदधत्, ब्रह्मास्वादमिवानुभावयन्, अलौकिकचमत्कारकारी शृंगारादिको रसः' तस्माज्जायत इति सिद्धान्तः सर्वमान्य एव ।

नागपूर नगर
१ जून १९३९.

---

परिकर[6]: काव्य[7]लिङ्गं चैतावेव रयणीयौ । उपमारूपकोत्प्रेक्षादयः सामान्य-संकेतबद्धा अपि नैवातिरुचिकरा मौलिकत्वाभावात् । श्लेष[8]स्तु क्वचिद्रमणीयतरो वैचित्र्योत्पादकश्च, क्वचित्तु क्लिष्टोऽनैसर्गिकोऽपि विच्छित्तिविशेषावहः । प्रथमः सर्गः प्रायः सुन्दरतमो रचना-कल्पना-भावनादि-विषये । विशेषतः प्रत्यर्तु श्लोक एकतमे रमणीयं शद्बचित्रम् । द्वितीये सर्गे शब्दालङ्कारसौन्दर्येण प्रकाशितं सामान्यतमं वस्तु । तृतीये पुनः 'सखि तुलसि' इत्यादि सप्तमं, 'श्रीकृष्णचक्रस्य' इत्यादि पञ्चदशं च श्लोकं विहायान्यत्सर्वम-सुन्दरमेव । चतुर्थेऽपि सर्गे 'कमललोचनं' इत्यादि द्वितीयं, 'तवकथासुधा' इत्यादि दशमं श्लोकमृते 'दर्शयेशनः' 'पाययेशनः' इत्यादिकं पुनरुक्ति प्रायम-समीचीनं, काव्यत्वहाने : । गुणसंकीर्तनरूपं तु वस्तु भक्तिपोषकं स्यात् । पंचमे च सर्गे प्रारम्भो रमणीय एव । प्रतिश्लोकं वायुपर्यायं प्रयुज्य सार्थ-कताप्रतिपादनेन काव्यशोभा पाण्डित्यसहकारिणी कृता । सन्देशोऽपि समुचितः प्रियविरहिणीनाम् । कथान्तश्च हरिविनोदोपकारक : ।

'अक्षारितताशनशत्रुपिच्छकिरीटमाली' इत्यत्र क्लिष्टोऽप्यर्थश्चमत्कार-जनक : । वृत्तवैचित्र्यं चान्यो गुणविशेषोऽस्य काव्यस्य ।

स्फुटतरास्तु केचन दोषा दृश्यन्ते यत्रतत्र । अनुवादवाक्ये 'इति' शब्दस्यास्थाने प्रयोग[9]:; उत्प्रेक्षायां च 'इव' शब्दस्य[10]; अनवश्यकोपसर्गाणां ग्रहणं,[11] समाप्तपुनरात्तत्व[12]मिति । वृत्तदोषा[13] अपि क्वचिद्विरसतामावहन्ति ।

टीका तु व्यवस्थिततरा, सत्यमेव 'स्फुटार्थिका' यथोक्त ग्रन्थकृतैव । सर्वत्रान्वयानुसारं कठिनपदार्थप्रकटनेन, काव्यशोभासूचनेन, अमरकोशाद्या-धारदानेन, अलङ्कारलक्षण-तत्संगतिविधानेन, वृत्तविवरणेन, भावप्रकाशनेन च व्याख्याख्यामर्हति सा । ग्रन्थकर्तुः पाण्डित्यप्रदर्शिकेयं व्याख्या । तस्य महाभारत-भागवत-स्कन्दपुराणान्तर्गत-काशीखण्डादि-परिशीलनं द्योतयति समयो-चितोल्लेख : सर्वेषाम् । विशेषतो द्रष्टव्या टीकावस्तनेषु श्लोकेषु :—

प्र० ३, १०, १९, २३, द्वि. २, १६; तृ. ७, १५; च. २, १०, पं. २१.

---

६ प्र० १३; द्वि. ३, ५, २०, च. २, १३;

७ प्र० ४, ७; तृ. १०, १६, १७.

८ प्र० २१, च. २, १०; पं. वायुपर्यायेषु.

* उपजातिः २८, वसंततिलका २४, अपरांतिका २१, रथोद्धता १०, इंद्रवज्रा ९, स्वागता, उपेंद्रवज्रा, पुष्पिताग्रा प्रत्येकं ३, वंशस्थ, शा. वि., इन्द्रवंशा प्रत्येकं २, प्रहर्षिणी, वैतालीयं, मालिनी प्रत्येकं १ = ११०.

९ प्र. ९, द्वि. २, ९, १६, तृ. २१; पं. ५. १० तृ. २,

११ निष्क्रन्तति, प्रसमीक्षितः, संप्रोचुः, प्रविहाय, प्रपीडिताः, प्रचुम्ब्य, प्रदर्शय इत्यादि

१२ प्र. २, १२, द्वि. १८, २१; १३ प्र. ५, ६, ७, २०, पं. १०;

परिकर : काव्यलिङ्गं चैतावेव रयणीयौ। उपमारूपकोत्प्रेक्षादयः सामान्य-संकेतबद्धा अपि नैवातिरुचिकरा मौलिकत्वाभावात्। श्लेषस्तु क्वचिद्रमणीयतरो वैचित्र्योत्पादकश्च, क्वचित्तु क्लिष्टोऽनैसर्गिकोऽपि विच्छित्तिविशेषावहः। प्रथमः सर्गः प्रायः सुन्दरतमो रचना-कल्पना-भावनादि-विषये। विशेषतः प्रत्यर्तु श्लोक एकतमे रमणीयं शब्दचित्रम्। द्वितीये सर्गे शब्दालङ्कारसौन्दर्येण प्रकाशितं सामान्यतमं वस्तु। तृतीये पुनः 'सखि तुलसि' इत्यादि सप्तमं, 'श्रीकृष्णचक्रस्य' इत्यादि पञ्चदशं च श्लोकं विहायान्यत्सर्वम-सुन्दरमेव। चतुर्थेऽपि सर्गे 'कमललोचनं' इत्यादि द्वितीयं, 'तवकथासुधा' इत्यादि दशमं श्लोकमृते 'दर्शयेशनः' 'पाययेशनः' इत्यादिकं पुनरुक्ति प्रायम-समीचीनं, काव्यत्वहानेः। गुणसंकीर्तनरूपं तु वस्तु भक्तिपोषकं स्यात्। पंचमे च सर्गे प्रारम्भो रमणीय एव। प्रतिश्लोकं वायुपर्यायं प्रयुज्य सार्थ-कताप्रतिपादनेन काव्यशोभा पाण्डित्यसहकारिणी कृता। सन्देशोऽपि समुचितः प्रियविरहिणीनाम्। कथान्तश्च हरिविनोदोपकारकः।

'अक्षारिताताशनशत्रुपिच्छाकिरीटमाली' इत्यत्र क्लिष्टोऽप्यर्थश्चमत्कार-जनकः। वृत्तवैचित्र्यं चान्यो गुणविशेषोऽस्य काव्यस्य।

स्फुटतरास्तु केचन दोषा दृश्यन्ते यत्रतत्र। अनुवादवाक्ये 'इति' शब्दस्यास्थाने प्रयोगः; उत्प्रेक्षायां च 'इव' शब्दस्य; अनवश्यकोपसर्गाणां ग्रहणं,[११] समाप्तपुनरात्तत्वं[१२] मिति। वृत्तदोषा[१३] अपि क्वचिद्विरसतामावहन्ति।

टीका तु व्यवस्थिततरा, सत्यमेव 'स्फुटार्थिका' यथोक्तं ग्रन्थकृतैव। सर्वत्रान्वयानुसारं कठिनपदार्थप्रकटनेन, काव्यशोभासूचनेन, अमरकोशाद्या-धारदानेन, अलङ्कारलक्षण-तत्संगतिविधानेन, वृत्तविवरणेन, भावप्रकाशनेन च व्याख्याख्यामर्हति सा। ग्रन्थकर्तुः पाण्डित्यप्रदर्शिकेयं व्याख्या। तस्य महाभारत-भागवत-स्कन्दपुराणान्तर्गत-काशीखण्डादि-परिशीलनं द्योतयति समयो-चितोल्लेखः सर्वेषाम्। विशेषतो द्रष्टव्या टीकावस्तनेषु श्लोकेषुः—

प्र० ३,१०,१९,२३, द्वि. २,१६; तृ. ७,१५; च. २,१०, पं. २१.

---

६ प्र० १३; द्वि. ३, ५, २०, च. २, १३;

७ प्र० ४, ७; तृ. १०, १६, १७.

८ प्र० २१, च. २,१०; पं. वायुपर्यायेषु.

* उपजातिः २८, वसंततिलका २४, अपरांतिका २१, रथोद्धता १०, इंद्रवज्रा ९, स्वागता, उपेंद्रवज्रा, पुष्पिताग्रा प्रत्येकं ३, वंशस्थ, शा. वि., इन्द्रवंशा प्रत्येकं २, प्रह-र्षिणी, वैतालीयं, मालिनी प्रत्येकं १ = ११०.

९ प्र. ९, द्वि. २, ९, १६, तृ. २१; पं. ५. १० तृ. २,

११ निष्क्रन्तति, प्रसमीक्षितः, संप्रोचुः, प्रविहाय, प्रपीडिताः, प्रचुम्ब्य, प्रदर्शय इत्यादि

१२ प्र. २, १२, द्वि. १८, २१; १३ प्र. ५, ६, ७, २०, पं. १०;